या या भाविनवेणुगीतगतयो लीलामुखाम्भोरुहे
घायघादिकया चवन्तु हृदये तान्येव तान्येव मे ॥१०६॥

वसन्ततिलकं छन्दः

भक्तिस्त्वयि स्थिरतरा भगवन्यदि स्या-
द्दैवेन नः फलति दिव्यकिशोरमूर्तिः ।
मुक्तिः स्वयं मुकुलिताञ्जलिः सेवतेऽस्मा-
न्धर्मार्थ-कामगतयः समयप्रतीक्षाः ॥१०७॥

अनुष्टुप छन्दः

जय जय जय देव देवदेव त्रिभुवनमङ्गलदिव्यनामधेय ।
जय जय जय देव कृष्णदेव श्रवणमनोनयनामृतावतार ॥१०८॥

शार्दूलविक्रीडितं छन्दः

तुभ्यं निर्भरहर्षवर्षविवशावेशस्फुटाविर्भव-
द्भूयश्चापलभूषितेषु सुकृतां भावेषु निर्भासिने ।
श्रीमद्गोकुलमण्डनाय मनसो वाचां च दूरस्फुर-
न्माधुर्यैकमहार्णवाय* महसे कस्मैचिदस्मै नमः ॥१०९

वसन्ततिलकं छन्दः

ईशानदेवचरणाभरणेन नीवींदामोदरस्थिरयशस्तवकोद्भवेन[१]
लीलाशुकेन रचितं तव कृष्णदेव
कर्णामृतं वहतु कल्पशतान्तरेऽपि ॥११०॥

शार्दूलविक्रीडितं छन्दः

धन्यानां सरसानुलापसरणी सौरभ्य[२]मभ्यस्यतां
कर्णानां विवरेषु कामपि सुधा वृष्टि दुहानं मुहुः ।
धन्यानां[३] सुदृशां मनोनयनयोर्मग्नस्य देवस्य नः
कर्णानां वचसां विजृम्भितमहो कृष्णस्य कर्णामृतम् ॥१११॥

रुचिरा छन्दः

अनुग्रहद्विगुणविशाललोचनैरनुस्मरन्मृदुमुरलीरवामृतैः ।
यतो यतः प्रसरति मे विलोचनं ततस्ततः स्फुरतु तवैव विभवम् ॥११

इति श्रीलीलाशुकविरचिते श्रीकृष्णकर्णामृते
प्रथमशतक समाप्तम्

* रसार्णवाय १ द्भमेन २ सौरभ्य ३ [illegible]